# चम्पूरामायणे

# बालकाण्डम्

३६ – २४.०९.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- जनकस्य यागमण्डपं प्राप्ताः विश्वामित्रादयः
- जनकस्य कुलपुरोहितेन शतानन्देन कौशिककथाकथनम्
- सुरभिं प्राप्तुं कौशिकस्य इच्छा
- तपसा दिव्यास्त्राणां प्राप्तिः, वसिष्ठात् पराभवः
- ब्रह्मबलसिद्धये तपश्चरणम्
- त्रिशङ्कोः इच्छा – वसिष्ठेन तत्पुत्रैश्च निराकरणम्, विश्वामित्रम् उपसर्पति त्रिशङ्कुः

# असावपि तन्मनोरथपरिपूर्तये क्रतुमेकं प्राक्रमत।

- असौ, अपि, तत्-मनोरथ-परिपूर्तये, क्रतुम्, एकम्, प्राक्रमत
- असौ अपि = विश्वामित्रः अपि
- तन्मनोरथपरिपूर्तये = त्रिशङ्कोः इष्टसिद्ध्यर्थम्
- एकम् क्रतुम् = कञ्चिद् यज्ञम्
- प्राक्रमत = आरब्धवान्
- तात्पर्य्यम् - विश्वामित्रः त्रिशङ्कोः इष्टसिद्ध्यर्थं यज्ञमेकम् आरब्धवान्

# असावपि तन्मनोरथपरिपूर्तये क्रतुमेकं प्राक्रमत।

- तन्मनोरथपरिपूर्तये – तस्य मनोरथः, तन्मनोरथस्य परिपूर्तिः, तस्यै । इकारान्तः, स्त्री, ४.१
- क्रतुम् – "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" (अमरः)
- प्राक्रमत – प्र + "क्रमु पादविक्षेपे" – लङ्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# तत्र समागतेषु ब्राह्मणेषु जुगुप्सया त्रिशङ्कोरनागतान्वसिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत्।

- तत्र, समागतेषु, ब्राह्मणेषु ,जुगुप्सया, त्रिशङ्कोः, अनागतान्, वसिष्ठ-पुत्रान्, अयम्, शापेन, श्व-भक्षकान्, अकरोत्
- तत्र = विश्वामित्रेण समारब्धे यज्ञे
- ब्राह्मणेषु = ऋषिमुनिषु
- समागतेषु = विश्वामित्रभयात् उपागतेषु सत्सु
- त्रिशङ्कोः जुगुप्सया = गुरुतिरस्कारं कृतवतः त्रिशङ्कोः विषये उपक्रोशेन

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तत्र समागतेषु ब्राह्मणेषु जुगुप्सया त्रिशङ्कोरनागतान्वसिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत्।

- अनागतान् = असंप्राप्तान्
- वसिष्ठपुत्रान् = महोदयादीन् वसिष्ठसुतान्
- अयम् = विश्वामित्रः
- शापेन = आक्रोशेन
- श्वभक्षकान् = शुनकमांसाशिनः
- अकरोत् = कृतवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# तत्र समागतेषु ब्राह्मणेषु जुगुप्सया त्रिशङ्कोरनागतान्वसिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत्।

- तात्पर्य्यम् – विश्वामित्रेण यज्ञे समारब्धे बहवः ऋषिमुनयः तद्भयात् तत्र समागताः । वसिष्ठपुत्रास्तु त्रिशङ्कोः, विश्वामित्रस्य च विषये उपक्रोशेन यज्ञे न समागताः । तदा विश्वामित्रः कोपेन तान् श्वभक्षकत्वेन अशापत् ।
- क्षत्रियो याजको यस्य चण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥
- जुगुप्सया त्रिशङ्कोः – "जुगुप्सा-विराम-प्रमादार्थानाम् उपसंख्यानम्" इति वार्त्तिकेन पञ्चमीविभक्तिः

# ततः क्रतुभुजां वर्गेऽपि स्वर्गादनवतीर्णे।

- ततः, क्रतु-भुजाम्, वर्गे, अपि, स्वर्गात्, अनवतीर्णे
- ततः = तदनन्तरम्
- क्रतुभुजाम् = देवानाम्
- वर्गे अपि = समूहे अपि
- स्वर्गात् = नाकात्
- अनवतीर्णे = न समागते

# ततः क्रतुभुजां वर्गेऽपि स्वर्गादनवतीर्णे।

- तात्पर्य्यम् – विश्वामित्रकृते यज्ञे हविर्भागस्य स्वीकाराय देवाः न समागताः ।
- क्रतुभुजाम् – जकारान्तः, पुं, ६.३ । “बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः” (अमरः)
- अनवतीर्णे – न अवतीर्णे । अव + “तॄ प्लवन-तरणयोः” + क्त

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम् ॥९६॥

- अयम्, महात्मा, तपसः, प्रभावात्, आरोपयामास, दिवम्, त्रिशङ्कुम्, नील-अम्बरम्, निह्नुत-राजवेषम्, वर्षा-निशीथात्, अविशेष-वेषम्
- आरोपयामास = आरोपितवान्
- कः आरोपयामास? अयम् = विश्वामित्रः
- कीदृशः अयम्? महात्मा = महानुभावः
- कम् आरोपयामास? त्रिशङ्कुम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
# नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥९६॥

- काम् आरोपयामास? दिवम् = स्वर्गम्
- कथम् आरोपयामास? तपसः प्रभावात् = तपोबलात्
- कीदृशं त्रिशङ्कुम्? नीलाम्बरम् = कृष्णवस्त्रधारिणम्
- पुनः कीदृशं त्रिशङ्कुम्? निह्नुतराजवेषम् = शापवशात् आच्छादित-नृपनेपथ्यम्
- पुनः कीदृशं त्रिशङ्कुम्? अविशेषवेषम् = भेदरहितम्

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥९६॥

- कस्माद् अविशेषवेषम्? वर्षानिशीथात् = वृष्टिकालस्य अर्धरात्रात्
- अन्वयः – अयं महात्मा तपसः प्रभावात् नीलाम्बरं, निह्नुतराजवेषम्, वर्षानिशीथात् अविशेषवेषं त्रिशङ्कुं दिवम् आरोपयामास ।
- तात्पर्य्यम् – देवानाम् अनागमनेन क्रतौ असमाप्तेऽपि, विश्वामित्रः स्वस्य तपोबलेन त्रिशङ्कुं स्वर्गम् आरोपितवान् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥९६॥

- महात्मा – महान् आत्मा यस्य सः । नकारान्तः, पुं, १.१ ।
- आरोपयामास – आ + "रुह बीजजन्मनि प्रादुर्भावे च" + णिच् – लिट्, प्रथम.१
- दिवम् – वकारान्तः, स्त्री, २.१ । "सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
# नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥९६॥

- नीलाम्बरम् – त्रिशङ्कुपक्षे, नीलम् अम्बरम् = वस्त्रम् यस्य सः, तम् । रात्रिपक्षे, नीलम् अम्बरम् = गगनस्य यस्य तम् । "अम्बरं व्योम्नि वाससि" (अमरः)
- निह्नुतराजवेषम् – त्रिशङ्कुपक्षे, निह्नुतः = आच्छादितः, राजवेषः = नृपनेपथ्यम् यस्य सः, तम् । रात्रिपक्षे निह्नुतः = आच्छादितः, राजवेषः = चन्द्रप्रकाशः यस्य सः, तम् । "राजा मृगाङ्के क्षत्रिये नृपे" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।
नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥१६॥

- वर्षानिशीथात् – वर्षाणां निशीथः, तस्मात् । "स्त्रियां प्रावृट्स्त्रियां भूम्नि वर्षाः", "अर्धरात्रनिशीथौ द्वौ" (अमरः)
- अविशेषवेषम् – न विशेषः, अविशेषः वेषः यस्य सः, तम् ।
- श्लेषालङ्कारः
- उपजातिः (१ उपेन्द्रवज्रा, २,३,४ – इन्द्रवज्रा) वृत्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
# ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥१७॥

- अपातयत्, स्वर्गम्, उपाश्रयन्तम्, सञ्ज्ञात-मन्युः, शत-मन्युः, एनम्, ततः, अवलम्ब्य, अस्य, नियोग-शङ्कुम्, लेभे, त्रिशङ्कुः, गगने, प्रतिष्ठाम्
- अपातयत् = अधः पातयामास
- कः अपातयत्? शतमन्युः = इन्द्रः
- कीदृशः शतमन्युः? सञ्ज्ञातमन्युः = उत्पन्नक्रोधः
- कम् अपातयत्? एनम् = त्रिशङ्कुम्

अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- कीदृशम् एनम्? उपाश्रयन्तम् = प्रविशन्तम्
- कम् उपाश्रयन्तम्? स्वर्गम् = नाकम्
- ततः = तदनन्तरम्
- लेभे = प्राप्तवान्
- कः लेभे? त्रिशङ्कुः = इन्द्रेण पातितः त्रिशङ्कुः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- कां लेभे? प्रतिष्ठाम् = स्थितिम्
- कुत्र प्रतिष्ठां लेभे? गगने = आकाशे
- किं कृत्वा लेभे? अवलम्ब्य = अवष्टभ्य
- कम् अवलम्ब्य? नियोगशङ्कुम् = आज्ञारूपां यष्टिम्
- कस्य नियोगशङ्कुम्? अस्य = विश्वामित्रस्य

# अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
# ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । एष त्वां सशरीरेण नयामि स्वर्गमोजसा ॥
- स्वार्जितं किञ्चिदप्यस्ति मया हि तपसःफलम् । राजन् स्वतेजसा तस्य सशरीरो दिवं व्रज ॥
- उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः। दिवं जगाम काकुत्स्थः मुनीनां पश्यतां तदा ॥
- देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः। सह सर्वैस्सुरगणैरिदं वचनमब्रवीत् ॥

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः। गुरुशापहतो मूढ पत भूमिमवाक्छिराः ॥
- एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः। विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ॥
- तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः। रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥

बालकाण्डम् ६०.१३-१९

अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- अन्वयः – स्वर्गम् उपाश्रयन्तम् एनं सञ्ज्ञातमन्युः शतमन्युः अपातयत् । ततः अस्य नियोगशङ्कुम् अवलम्ब्य त्रिशङ्कुः गगने प्रतिष्ठां लेभे ।
- तात्पर्य्यम् – यज्ञेऽसम्पूर्णेऽपि विश्वामित्रस्य तपोबलेन स्वर्गं प्रविशन्तं त्रिशङ्कुं कुपितः इन्द्रः अधः पातयामास । तदा “तिष्ठ तिष्ठ” इति विश्वामित्रस्य आज्ञावचनरूपां यष्टिम् अवलम्ब्य त्रिशङ्कुः मध्येगगनं स्थितः ।

अपातयत्स्वर्गमुपाश्रयन्तं सञ्ज्ञातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- अपातयत् – “पत्लृ गतौ” + णिच् – लङ्, प्रथम.१
- उपाश्रयन्तम् – उप+आ+ “श्रिञ् सेवायाम्”+शतृ । तकारान्तः, पुं, २.१
- सञ्ज्ञातमन्युः – सञ्ज्ञातः मन्युः यस्य सः
- शतमन्युः – शतं मन्यवः यस्य । “जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अपातयत्स्वर्गमुपाश्रयन्तं सञ्जातमन्युः शतमन्युरेनम्।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥

- अवलम्ब्य – अव + "लबि अवस्रंसने च" + ल्यप्
- नियोगशङ्कुम् – नियोगः एव शङ्कुः, तम्
- लेभे – "डुलभष् प्राप्तौ" – लिट्, प्रथम.१
- गगने – "नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्" (अमरः)
- उपजातिः (१,३ – उपेन्द्रवज्रा, २,४ – इन्द्रवज्रा)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं तत्र तपःप्रत्यूहः प्रत्युद्धूत इति पश्चिमायां दिशि पुष्करे पुष्कलं तपश्चरन्तममुमम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्तावदृचीकस्य मध्यमपुत्रः शुनःशेपः शरणमयाचत।

- ततः, गीर्वाण-गण-प्रार्थनया, परित्यक्त-भुवन-अन्तर-निर्माण-कर्माणम्, तत्र, तपः-प्रत्यूहः, प्रत्युद्धूतः, इति, पश्चिमायाम्, दिशि, पुष्करे, पुष्कलम्, तपः, चरन्तम्, अमुम्, अम्बरीष-यज्ञ-पशु-विनाश-प्रायश्चित्त-अर्थम्, बह्वीभिः, गोभिः, क्रीत्वा, नर-पशुताम्, नीयमानः, तावत्, ऋचीकस्य, मध्यम-पुत्रः, शुनःशेपः, शरणम्, अयाचत

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं

- ततः = तदनन्तरम्,
- गीर्वाणगणप्रार्थनया = देवसमूहस्य याञ्चया
- परित्यक्तभुवनान्तरनिर्माणकर्माणम् = नूतनलोकसृष्टेः कार्यं त्यक्तवन्तं

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं

- ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः। सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः ॥
- नक्षत्रमालामपरामसृजत्क्रोधमूर्च्छितः । सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥
- अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः । दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ॥
- ततः परमसम्भ्रान्तास्सर्षिसङ्घास्सुरासुराः । विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥
- अयं राजा महाभाग गुरुशापपरिक्षतः । सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥
- तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः । अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं

- सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः । आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥
- स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः। नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥
- यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः। मत्कृतानि सुरास्सर्वे तदनुज्ञातुमर्हथ ॥
- एवमुक्ताः सुरास्सर्वे प्रत्यूचुर्मुनिपुङ्गवम्। एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥
- नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिष्षु जाज्वलन्। अवाक्छिरास्त्रिशङ्कुश्च तिष्ठत्वमरसन्निभः ॥

बालकाण्डम् ६०.२०-३१

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# तत्र तपःप्रत्यूहः प्रत्युद्भूत इति पश्चिमायां दिशि

- तत्र = दक्षिणदिग्भागे
- तपःप्रत्यूहः = तपसः विघ्नः
- प्रत्युद्भूतः = उत्पन्नः
- इति = इति हेतोः
- पश्चिमायां दिशि = पश्चिमदिग्भागे

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# पुष्करे पुष्कलं तपश्चरन्तममुम्

- पुष्करे = पुष्करक्षेत्रे
- पुष्कलम् = भूयिष्ठम्
- तपश्चरन्तम् = तपः कुर्वाणम्
- अमुम् = विश्वामित्रम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# सङ्क्षेपः

- त्रिशङ्कोः कथा – विश्वामित्रेण कृतः यज्ञः, अनागतानां वासिष्ठानां कृते शापः, असम्प्राप्ताः देवाः, तपोबलेन स्वर्गं प्रेषितः त्रिशङ्कुः इन्द्रेण अधः पातितः, क्रुद्धेन विश्वामित्रेण नूतनलोकनिर्माणम्, देवानां प्रार्थनया तत्त्यागः
- दक्षिणदिशं त्यक्त्वा पश्चिमदिशि पुष्करक्षेत्रे विश्वामित्रस्य तपः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in